कोऽप्यन्यः सुभगः स एव सुभगो यद्वीक्षणे वेपथुः
स्वेदो जृम्भणसाध्वसानि भजतेऽवस्थां परां मद्वपुः ॥ ७ ॥

अथ चित्रे—

चित्रार्पितोऽपि दयितः सखि चित्रमत्र
रोमाञ्चमुद्गमयति स्फुटवेपथुं च ।
लज्जां विभिद्य वशयत्ययमद्य रूप-
लावण्यसुन्दरतनुः प्रसभं मनो मे ॥ ८ ॥

अथ स्वप्ने—

कान्ते तल्पमुपागते प्रियतमा संवेशलब्धेऽथ त-
त्पाणिस्पर्शनजातरोमविकृतिः किञ्चित्सरोषावदत् ।
मा मां संस्पृश नाथ शून्यमिति सा किञ्चिल्लपन्ती वय-
स्या श्रुत्वेति शुशोच कः स सुभगः स्वप्नेऽपि यं नाथति ॥ ९ ॥

प्रदेशे—

सौधं सुन्दरि चन्द्रधामधवलं दीप्तप्रदीपोज्ज्वलं
गेयं कोकिलकाकलीसुमधुरं स्फारीभवन्मन्मथम् ।
खण्डक्षोदसुधामधूकमधुरः सीधुः स्फुटं निष्फलो
यद्यायाति गृहे न तेऽद्य सुभगः सौभाग्यशोभाचणः ॥ १० ॥

काले—

धुन्वन्सरोरुहवनानि मरुत्प्रवाति
चन्द्रोदयेन कुमुदानि विकस्वराणि ।
तल्पं प्रकल्पितमिदं कुसुमप्रवेकै-
स्तत्त्वं विनाखिलमिदं न मनो धिनोति ॥ ११ ॥

भङ्ग्या—

अलमलं तव यौवनभङ्गिभिः
सखि दृशोः कुचयोरपि विभ्रमैः ।
स सुभगो यदि नैव निरीक्ष्यते
न रहसि प्रसभं परिरभ्यते ॥ १२ ॥

अथान्यदीयकन्यास्वरूपम्—

कन्या रन्तुं न च द्रष्टुं वक्तुं शक्नोति वल्लभम् ।
संलपन्तं च पश्यन्तं रहसि त्रपया स्फुटम् ॥ १३ ॥

आहूता समुपैति नापि दयितेनोक्ता न च व्याहर-
त्येषा वक्तुमपीहते न शयने शेते पुनः संमुखम् ।
दीर्घं पश्यति नैव वीक्षितुमसावीप्सत्यनङ्गत्रपा-
वेशाद्धर्तरि नैव कातरमिदं धत्ते स्म बालाबला ॥ १४ ॥

नायिकाहृदयज्ञा या सखी जल्पति नायकम् ।
तत्सखीं नायकः किं वा स्नेहाभिव्यक्तिहेतवे ॥ १५ ॥

अतित्रपामुद्रितनेत्रकुड्मला
मुहुर्मुहुः कण्टकिताङ्गयष्टिका ।
कुमुद्वतीवोत्तमवंशचन्द्र ते
कनी करस्पर्शमतीव काङ्क्षति ॥ १६ ॥

यच्चन्द्रातपचन्द्रचन्दनमृणालादीनि शीतानि मे
कामं संज्वरयन्ति घर्मसलिलक्लिन्नं वपुर्जायते ।
यत्संमोहयतीव पङ्कजवनप्रोद्भूतमन्दानिल-
स्तन्मन्दाक्षविजृम्भितं सुतनु ते जानीहि सर्वं ध्रुवम् ॥ १७ ॥

अथ मुग्धाचेष्टितानि—

सा वल्लभमपश्यन्तं प्रसृताक्षी विलोकते ।
आलिमालिङ्गति स्वैरं दूरादुद्वीक्षतेऽथ तम् ॥ १८ ॥

सख्या संलपति प्रायो हासं कुर्यादकारणम् ।
सुन्दराङ्गमथ व्याजादाविष्कुर्यात्सविभ्रमम् ॥ १९ ॥

मुहुर्गुम्फति सख्यादिगुम्फितां किङ्किणीस्रजं ।
अङ्गभङ्गादिकां चेष्टां मञ्जुलां दर्शयत्यसौ ॥ २० ॥

प्रियतमेऽभिमुखं समुपागते
वनितया स्थितमेव समौनया ।

प्रचलितः स तथाधिकमीक्षितो
ननु दृशौ कुरुतः श्रुतिलङ्घनम् ॥ २१ ॥

आभुग्नीकृतकण्ठकन्दललुलद्वक्षोजवक्षोभर-
त्रुट्यन्मौक्तिकतारहारलतया घर्माम्बु बिभ्राणया।
पत्यौ पश्यति दूरतोऽप्यभिमुखं संसक्तहुङ्कारया
कामं कामजसंज्वरज्वरितयाश्लिष्टा तदालिस्तया ॥ २२ ॥

अथोद्धतमन्मथा—

कान्तं विलोक्य यदकारणमेव हास्यं
कुर्वीत संलपति या च सखीं मृगाक्षी।
स्वाङ्गं प्रदर्शयति मन्मथविक्लवाङ्गी
सा तद्वशं वदति निश्चितमात्मचित्तम् ॥ २३ ॥

हेमाम्भोरुहनालवद्भुजलतामुत्क्षिप्य कक्षस्थल-
प्रादुर्भूतमनोहरच्छविमथाङ्गुल्यग्रजाग्रन्नखम्।
तस्याः कुञ्चितलोचनं स्तनलुठन्मुक्तावलीमञ्जुलं
वेल्लत्कङ्कणनिःस्वनं च शुशुभे कण्डूयनं श्रावणम् ॥ २४ ॥

काचिद्विलोक्य दयितं दयितस्रजं च
हारं कलत्ररशनां श्रयति स्म हर्षात्।
तन्मन्मथस्य किल वास्तुमदत्त वस्तुं
प्रत्यङ्गसंगमकृते सुहृदोऽपि भूयः ॥ २५ ॥

अथ दुःखसंस्था—

सर्वमेतद्विधत्ते च प्रौढाप्युद्धतमन्मथा।
वल्लभा दुःखसंस्था तु सोपालम्भं वदत्यसौ ॥ २६ ॥

उज्झित्वालिवचांसि साध्वसभरं भित्त्वा त्रपावर्तनीं
हित्वा स्वं सुभगत्वगर्वमुचितं चापास्य वश्या तव।
किञ्चानङ्गनृपस्य शासनमुपादाय स्वयं त्वं मया
सौभाग्यैकनिधे निधाय हृदये हृद्यः किलाङ्गीकृतः ॥ २७ ॥

निमीलितदृशो हर्षादारोहः प्रस्रवत्यथ।
वेपथुं तनुते गात्रं प्रियायाः प्रियदर्शने ॥ २८ ॥

हर्षोत्कर्षवशान्निमीलितदृशा भ्रश्यद्रणन्मेखला-
संवृत्याकुलहस्तया स्मरभरक्लिन्नस्मरावासया।
चित्रं कम्पितगात्रयापि विजने तन्व्या चटूक्तीर्वद-
न्नास्तां रन्तुमपीक्षितुं प्रियतमः संभावितो दुर्घटः॥ २६॥

दुःखितापि स्वयं कन्या न मुग्धत्वात्प्रियं वदेत्।
तत्सखी तदवस्थां तु यथास्वं समुदीरयेत्॥ ३०॥

रम्भादलानि किल मुर्मुरतां भजन्ते
श्वासैरथाश्रुभिरुदीर्यत एव तापः।
तस्या वियोगवशतः प्रिय कार्श्यमेवं
यत्त्वाङ्गुलीयमपि कङ्कणतां प्रयाति॥ ३१॥

अथ पणाङ्गना—

स्वकीयानन्यशरणा वित्तहार्या पणाङ्गना।
प्रेमोद्रेकः परस्याः स्यात्तैषा कामिनां प्रिया॥ ३२॥

वेश्या सामान्यवनिता कृत्रिमस्नेहपण्डिता।
तस्या गुणिनि न प्रीतिर्न चाप्रीतिश्च निर्गुणे॥ ३३॥

केवलं धनलुब्धास्ता हृदि प्रेमविवर्जिताः।
शृङ्गाराभासरूपः स्यात्तत्संभोगस्तु कामिनाम्॥ ३४॥

यो वेषभृद्गूढकामः सुखलब्धधनो जडः।
क्लीबस्तु पुरुषंमन्यो योऽभिमानी पितुर्धनात्॥ ३५॥

इत्यादिपुरुषान् गत्वा सर्वमाकृष्य तद्धनम्।
निर्धनांस्तान् विमुञ्चन्ति तास्ततो वर्जयेद्बुधः॥ ३६॥

तासां प्रगल्भसुरतप्रौढानां तु मनोहरम्।
तिरस्कृतपरस्त्रीकं मैथुनं स्यात्प्रियं नृणाम्॥ ३७॥

गाढाश्लेषविमर्दितस्तनयुगं स्वेदार्द्रगण्डस्थलं
भ्राम्यद्भ्रूयुगलं नखाङ्कमणितैर्घातैर्विचित्रं पुनः।
सन्दष्टौष्ठविसारसीत्कृतिरवं वेल्लत्कराम्भोरुहं
पण्यस्त्रीसुरतं रतेरिव गृहं कामी लभेत क्वचित्॥ ३८॥

नान्याङ्गनासु सुरतं किल निर्विशङ्कं
कर्तुं क्षमः कुलवधूषु धवोऽभ्यसूयाम् ।
पण्याङ्गनासु लभते द्वयमेव तस्मात्
सर्वस्वमेव तदिमाः कमनस्य कामम् ॥ ३९ ॥

अयुक्त्या सेविता घ्नन्ति युक्त्या संमदयन्ति ताः ।
निसर्गेणैव दुर्ज्ञेया वेश्यास्तेन विषोपमाः ॥ ४० ॥

अथेमा अष्टौ नायिकाः—

आदौ स्वाधीनपतिकाथोत्का वासकसज्जिका ।
अभिसन्धिता विप्रलब्धा खण्डिताप्यभिसारिका ॥ ४१ ॥

प्रोषितप्रेयसी चेति नायिकाः प्राङ्निरूपिताः ।
ता एवेह भवन्त्यष्टौ स्वावस्थाभेदतो यथा ॥ ४२ ॥

अथ स्वाधीनपतिका—

पार्श्वं नोज्झति यस्यास्तु रतिप्रेमवशः पतिः ।
नानाविलाससंसक्ता स्वाधीनपतिकोदिता ॥ ४३ ॥

तत्कण्ठे कुसुमस्रजं कलयति द्राग्वृत्तपीनस्तन-
द्वन्द्वे पत्रलतां तनोति तिलकं भालेऽथ विन्यस्यति ।
गण्डौ कुण्डलमण्डितौ जनयति प्रेमोदितैस्तद्वपुः-
स्पर्शं चापि दधद्वियोगविधुरः प्रेयान् प्रियां नोज्झति ॥ ४४ ॥

अथोत्का—

सोत्का भवति यस्यास्तु सङ्केतं नागतः प्रियः ।
तस्य चानागमे हेतुं चिन्ताव्याकुलिता स्मरेत् ॥ ४५ ॥

नागान्मे दयितः कयापि परया रुद्धोऽथ सख्याथवा
व्यासक्तः किमु कारणेन महता भाव्यं तदत्र क्षणे ।
विन्यस्यास्य सरोरुहं करतले दीर्घं रुदित्वा तया
निश्वस्यापि चिरं ततः क्षितितले क्षिप्ताश्च पुष्पस्रजः ॥ ४६ ॥

अथ वासकसज्जा—

ज्ञेया वासकसज्जा सा सज्जिताङ्गा रताश्रया।
वल्लभागममालोच्य द्वारालोकनतत्परा ॥ ४७ ॥

सालंकारमुदीक्ष्य दर्पणतले स्वाङ्गं प्रदीपोज्ज्वलं
रम्यं तद्गृहसद्म पद्मनयनान्तः संमदं बिभ्रती।
आयाते दयिते भविष्यति रतं सोत्कण्ठमेवं चिरा-
न्नेत्रेन्दीवरमालिकां किल पुरो द्वाःस्थाक्षिपत्तत्पथि ॥ ४८ ॥

अथाभिसन्धिता—

पदलग्नोऽपि यः कोपात्पतिः पूर्वं निराकृतः।
तं विना दुःस्थिता साभिसन्धिता कथिता बुधैः ॥ ४९ ॥

कोपात्कोपनया मया चरणयोर्लग्नः पतिर्धिक्कृतो
यन्मानान्न सखीवचोऽपि विहितं लब्धं ततस्तत्फलम्।
यच्छीतान्यपि चन्द्रचन्दनबिसाम्भोजादिवस्तूनि मे
चण्डांशूल्मुकसंनिभानि च वपुः सन्तापयन्ति ध्रुवम् ॥ ५० ॥

अथ विप्रलब्धा—

दूतीं संप्रेष्य सङ्केतं गत्वा स्वयमनागते।
प्रिये च तं विना दुःस्था विप्रलब्धाभिधीयते ॥ ५१ ॥

सङ्केताश्रयमेव भर्तृगदितं संप्रेष्य दूतीं स्वयं
स्थित्वा तत्र च तं विना चिरमसौ वन्ध्याभिलाषा ततः।
किं तु स्वागमसूचनाय नयनैर्बाष्पद्रवत्कज्जलै-
र्वर्णश्रेणिमिवालिलेख सुचिरं मन्दं रुदत्यङ्गणे ॥ ५२ ॥

अथ खण्डिता—

दयितो नागतो यस्याः कुतोऽपि रतिमन्दिरे।
तदनागमनेनैव संतप्ता खण्डिता मता ॥ ५३ ॥

दीर्घं निश्वसितं तथैव रुदितं सोत्कण्ठमुद्वीक्षितं
यातं मन्दगतेन सास्रमसकृच्चक्षुर्हरित्स्वाहितम्।

सख्या संलपितं प्रिये रतिगृहे नागच्छति व्याकुल-
प्रेयस्या तदनुष्ठितं किमपि यद्वक्तुं न कोऽपि क्षमः ॥ ५४ ॥

अथाभिसारिका—

निस्त्रपा स्यान्मदेनैव मदनेनाप्रिया प्रिया ।
अभियाति प्रियप्रोक्तं सङ्केतं साभिसारिका ॥ ५५ ॥

द्रष्टुं वल्लभमीक्षणैर्न तडितस्त्रस्तं न चाम्भोधर-
ध्वानोऽप्याकलितः श्रुतं तदुदितं वाक्यं विमृश्यानया ।
नासारप्रभवा स्मृता विधुरता तत्संगमाकाङ्क्षया
सङ्केतं दयितस्य केवलमलंचक्रेऽभिसारोद्यमा ॥ ५६ ॥

अथ प्रोषितपतिका—

यस्याः कृत्वावधिं भर्ता विदेशं कारणाद्गतः ।
तदनागमसंतप्ता प्रोषितप्रेयसीति सा ॥ ५७ ॥

काचित्पाण्डुरगण्डमण्डललुलत्केशावलीसंयमं
कृत्वाथ श्लथकङ्कणच्युतिभयादुद्यम्य हस्तौ निजौ ।
स्फारद्वारकपाटलम्बिततनुर्दत्तेक्षणा तत्पथि
प्रायः प्रेमभरालसा सुकृतिना सद्यः समाश्लिष्यते ॥ ५८ ॥

चिन्ताश्रुपातभरसंज्वरखेददीर्घ-
निश्वाससख्युदितवर्णनसंप्रयोगैः ।
पर्यायोत्कया गतधवा किल विप्रलब्धा
सा खण्डितापि विबुधैः सदृशीत्थमेव ॥ ५९ ॥

स्वाधीनभर्तृका हृष्टा नानालंकृतिमण्डना ।
एवं वासकसज्जा स्यात्परं सागन्तुकप्रिया ॥ ६० ॥

त्रिधाभिसारिका स्वीया परकीया पणाङ्गना ।
स्वाधीनपतिकाद्यास्तु यथोक्ताः प्राक् तथा मताः ॥ ६१ ॥

स्वीया सलज्जा सभया प्रच्छन्नापि प्रियं व्रजेत् ।
परकीया तु तद्गेहं प्रच्छन्ना शङ्किता हृदि ॥ ६२ ॥

निःशङ्किता मदोद्रेका प्रसृताक्षी सखीयुता ।
वेश्या तथैकधावस्थाभेदादेताः स्युरष्टधा ॥ ६३ ॥

पुनः सर्वास्त्रिधा ताः स्युरुत्तमा मध्यमाधमाः ।
शतत्रयी चतुरशीत्यग्रा भवति तन्मितिः ॥ ६४ ॥

अथोत्तमा—

प्रसीदत्यनुनीता या यथादोषं प्रकुप्यति ।
सानुरागा भृशं पत्यौ गुणाहार्या मतोत्तमा ॥ ६५ ॥

क्रुद्धा किं मयि सुभ्रु कोऽन्यमनुजे क्रोधः प्रिय प्रायशः
कोऽस्त्यन्यस्त्वमसीति मा वद शुभे दासोऽन्यदीयः कथम् ।
इत्युच्चार्य पदानतः प्रियतमो भूमेरुदस्यानया
सानन्दस्रवदश्रुसार्द्रकुचयोर्मध्ये धृतः कान्तया ॥ ६६ ॥

अथ मध्यमा—

स्वल्पापराधे या क्रोधं धत्ते शीघ्रं च मुञ्चति ।
कुतश्चित्कारणाद्रागं याति सा मध्यमा स्मृता ॥ ६७ ॥

कोपावेशवशस्फुरत्तरलसद्बिम्बोष्ठपार्श्वोल्लसद्-
गण्डाभोगपरिस्खलच्छ्रमजलव्याजृम्भमाणच्छविः ।
सभ्रूभङ्गविभूषणापि सुभगे पादानतेऽनुग्रहं
चक्रे नूपुरमिश्रतत्कचचयान्मन्दं पृथक्कुर्वती ॥ ६८ ॥

अथाधमा—

प्रकुप्यति विना मन्तुं तुष्यत्यनुनयं विना ।
निर्हेतुकप्रवृत्तिर्या चलचित्ताधमा मता ॥ ६९ ॥

यस्मिन्नुज्ज्वलगण्डमण्डलमिदं पूर्णेन्दुबिम्बं हस-
त्युच्चैर्मन्मथभूपतेरपि धनुर्भ्रूविभ्रमो भङ्गुरः ।
हारः स्वेदजबिन्दुविद्रुतरुचिर्मन्दीभवत्कङ्कण-
क्वाणो मानिनि कोऽभिमान इह ते पादप्रसक्ते मयि ॥ ७० ॥

जातिकालवयोऽवस्थाभावमन्मथनायकैः ।
भवेयुर्बहुधाप्यन्या नोदिता गुरुताभयात् ॥ ७१ ॥

कम्परोमोद्गमस्तम्भाः स्वेदाश्रुजलविभ्रमाः ।
वर्ण्याः सम्भोगशृङ्गारे कविभिर्नायिकाश्रिताः ॥ ७२ ॥

धर्मार्थकामनिपुणैर्द्विजराजमित्र-
संबन्धितीव्रकुलजा ललना न सेव्याः ।
व्यङ्गास्तपोन्नतधराश्च विभिन्नसंख्या
हीनान्वयाश्च चपला महतामगम्याः ॥ ७३ ॥

स्वीयाभिर्वरवर्णिनीभिरनिशं संभोगसौख्यं सदा
कुर्वाणो नखदन्तखण्डनविधौ चातुर्यचर्याचणः ।
यस्तत्याज पराङ्गनानिधुवनं सन्नीतिकीर्तिप्रियः
सोऽयं नन्दतु नीतिमानकबरः शृङ्गारभृङ्गारकः ॥ ७४ ॥

इति सकलकलापारीणरसिकसाम्राज्यधुरीण-
श्रीअकबरसाहिशृङ्गारदर्पणे द्वितीय उल्लासः ।

---

## तृतीय उल्लासः

अथ विप्रलम्भशृङ्गारः—

विप्रलम्भस्तु शृङ्गारश्चतुर्धा वर्ण्यते बुधैः ।
पूर्वानुरागो मानात्मा प्रवासः करुणाह्वयः ॥ १ ॥

तत्राद्यः—

यः पूर्वदर्शनोद्भूतो दम्पत्योः सानुरागयोः ।
पूर्वानुरागो विज्ञेयः स चाप्राप्तौ भवेद्यथा ॥ २ ॥

अलं रम्भापत्रव्यजनपवनैश्चन्दनचयै-
रलं फुल्लाम्भोजप्रसूनशयनीयैर्मम सखि ।
अलं चन्द्रज्योत्स्नाबिसकिसलयैर्दाहनिपुणैः
परं कन्दर्पाग्निं सुभगपरिरम्भः शमयति ॥ ३ ॥

पूर्णेन्दोरिव मण्डलाद्विरचितं यद्वा सुधास्यन्दितैः
स्त्यानीभूतममन्दसुन्दरलसल्लावण्यपुञ्जीकृतम् ।
लीलासद्म रतेरिव स्मरशराभ्यासैकभूमिः कदा
द्रक्ष्यामि प्रणयप्रसादसुषमं कान्तामुखाम्भोरुहम् ॥ ४ ॥

चन्द्रचन्दनकर्पूरबिसपङ्केरुहादयः ।
स्मरज्वरं न दम्पत्योः शमयन्ति निषेविताः ॥ ५ ॥

मिथो दर्शनसंलापप्रेमान्दोलितचित्तयोः ।
भवेत्तयो रसप्राप्तौ दशावस्थापरः स्मरः ॥ ६ ॥

ताश्चेमाः—

तत्राभिलाषश्चिन्ता च स्मृतिस्तद्गुणकीर्तनम् ।
स्यादुद्वेगः प्रलापश्चोन्मादो व्याधिस्तथाष्टमः ॥ ७ ॥

जडत्वं मरणं चेति कामावस्था दश स्मृताः ।
दम्पत्योः संगमाभावे जायन्ते विषमा इमाः ॥ ८ ॥

अथाभिलाषः—

तत्संगमकृते बाढं संकल्पाकुलचेतसा ।
व्यवसायो य एव स्यादभिलाषः स संस्मृतः ॥ ९ ॥

लोलाक्षी चलमानसा कुत इयं भूयो गृहान्तर्विश-
त्यायातीह बहिः सहालिभिरहो संभाषते सस्मिता ।
धत्ते विभ्रममन्थरां गतिमथालोक्य प्रियस्याननं
तन्मन्ये विषमायुधस्य विशिखैर्लक्ष्यीकृता लक्ष्यते ॥ १० ॥

अथ चिन्ता—

केनोपायेन लभ्यः स्याद्दयितोऽथ वशः कथम् ।
तत्प्राप्तयेऽथ किं कार्यमिति चिन्ता निगद्यते ॥ ११ ॥

प्रेयान् दूरगतः सखी न निपुणा भृत्ये रहस्यं कचि-
न्नो वाच्यं न पुनः स्मरज्वरभरोन्मन्थेऽस्ति वैद्यः पटुः ।
रागोऽस्मिन्मम चिन्तयेति सुदृशा दृष्टे प्रिये सत्वरं
बध्नन्त्या वसनावृतिर्न विहिता न प्रस्थितं न स्थितम् ॥ १२ ॥

अथ स्मृतिः—

औदास्यं परकृत्येषु यस्मिन्नेकाग्रता प्रिये ।
मनोरथैश्च निश्वासैश्चेष्टा तत्स्मरणं भवेत् ॥ १३ ॥

उज्जृम्भाम्बुरुहप्रवालशयने नैषा विधत्ते रतिं
चन्द्रं निन्दति विन्दतीव दहनं कर्पूरखण्डं पुनः ।
दीर्घश्वासमरुद्भिरेव कृशतां याता विषीदत्तनु-
स्तन्मन्ये स विमुग्धया परिचितः कश्चिद्विदग्धो युवा ॥ १४ ॥

अथ गुणकीर्तनम्—

तद्रूपस्मितचातुर्यसंलापैः सदृशः परः ।
युवा न दृश्यते कोऽपि स्यादेतद्गुणकीर्तनम् ॥ १५ ॥

तद्रूपं स्मरविभ्रमस्मयहरं तन्मञ्जुलालोकनं
वाचस्ताः स्मरकेलिभङ्गसुभगा निस्तन्द्रचन्द्रोपमम् ।

तस्यास्यं दयितैकतां न परतां विभ्रत्तदित्थं मनो
मन्ये भक्षितकालकूटमिव मे यस्मान्मुहुर्मूर्च्छति ॥ १६ ॥

अथोद्वेगः—

यत्र वस्तुनि रम्येऽपि द्वेषः प्रीतिर्न च क्वचित् ।
जीवितव्येऽप्यनाश्वासः स चोद्वेगो मतो यथा ॥ १७ ॥

संतापं तनुते शशी सुतनु ते प्रत्यङ्गमङ्गारव-
ल्लेपश्चन्दनजो धिनोति न मनः शीतानिलोऽन्यादृशः ।
विश्वासोऽपि न जीवितस्थितिविधावुत्क्रान्तचेता यत-
स्तत्किं सुन्दरि पञ्चबाणविशिखास्त्वय्यास्पदं चक्रिरे ॥ १८

अथ प्रलापः—

प्रियस्य संगमाभावान्मनो न लभते धृतिम् ।
वक्ति प्रियाश्रितालापं प्रलापो यत्र स स्मृतः ॥ १९ ॥

किञ्चित्कुञ्चितलोचनेन सुभगेनालोकिताहं मया-
पीत्थं चारु निरिक्षितः स च किमप्यूचे वचः सस्मितम् ।
नो शक्ता प्रतिवक्तुमाशु सखि किं यातो विधाय क्रुधं
नात्रायास्यति चेत्यनूद्य नयने विस्फारिते तत्पथि ॥ २० ॥

अथोन्मादः—

कम्परोदननिश्वासक्षितिलेखभ्रमादिभिः ।
चेष्टा संजायते यत्र स चोन्मादः स्मृतो यथा ॥ २१ ॥

दीर्घं निश्वसिति क्षितिं विलिखति त्रस्यत्कुरङ्गोक्षणा
सोत्कम्पा पुलकाङ्किता क्रिमपि च ध्यानाधिरूढा प्रिये ।
धृत्वाङ्के किल वल्लकीं च रुदती तस्थौ रुदत्येव सा
मन्ये केवलमेव मन्मथगुरोरादत्त दीक्षाक्षणम् ॥ २२ ॥

अथ व्याधिः—

दीर्घं श्वासाकुलत्वं च यत्र संतापवेदने ।
शरीरकृशता प्रायो व्याधिः स्यादष्टमो यथा ॥ २३ ॥

श्वासैः शोषितपुष्पहारनिचयैरापाण्डुगण्डस्थलैः
संतापैः किल मुर्मुरीकृतसितश्रीखण्डलेपद्रवैः।
गात्रं बालमृणालकोमलमिदं तन्वङ्गि यत्तानवं
प्रापत्तन्मदनज्वरप्रकटितैर्दोषैरभिज्ञायते ॥ २४ ॥

अथ जडत्वम्—

श्वासाधिक्यं स्मृतिभ्रंशो हुंकारः समयं विना।
स्तब्धत्वं च दृशः कार्श्यं जडतेत्युदिता यथा ॥ २५ ॥

यद्वक्त्रं घनसारसन्निभमिदं श्वासैः कदुष्णैः कृतो
बिम्बोष्ठस्तव धूसरोऽथ नयने निःस्पन्दतारे यतः।
याता नाशमपि स्मृतिः परमसौ हुंकार एव स्थित-
स्तच्छङ्के सनिवेश एव मदनः प्रत्यङ्गमङ्गस्मृतः ॥ २६ ॥

अथ मरणम्—

यदा पृथग्विधोपायैर्नार्या न प्रियसंगमः।
ततः स्मरेषुविद्धाया मरणस्य दशा भवेत् ॥ २७ ॥

एता एव दशावस्थाः पुंसोऽपि स्युर्मनोभुवः।
वैधर्म्यान्मिरणं प्रायः कविभिर्नाभिवर्ण्यते ॥ २८ ॥

वर्णयन्ति पुनः केचिन्मुहुर्जीवनकाङ्क्षया।
सत्यवृत्तानुवादे तदुत्पाद्ये क्वचिदेव न ॥ २९ ॥

एकस्य मरणेनान्यो म्रियते चेत्कथञ्चन।
प्रेमातिरेकता न स्यान्मृतश्चेत्केन संगमः ॥ ३० ॥

प्राङ्नारी सानुरागा स्यान्नरः पश्चात्तदिङ्गितैः।
ततः संभोगश्रृङ्गारो निसर्गसुभगो भवेत् ॥ ३१ ॥

अथ श्रृङ्गाराभासता—

ततोऽन्यथापि नो दोषः स्नेहसाम्यं यदि द्वयोः।
रक्तापरक्तवृत्तौ तु श्रृङ्गाराभासता मता ॥ ३२ ॥

श्रृङ्गाराभासता प्रायो बुधैर्हास्येषु वर्ण्यते।
दुर्विधिन मया वेश्ये तारुण्यं सफलीकुरु ॥ ३३ ॥

अथ परस्त्रीसंगमोपायः—

यस्यां च सानुरागः स्यान्नायकस्तत्सखीगणम् ।
आवर्जयति साम्नापि दानमानादिभिर्गुणैः ॥ ३४ ॥

तत्सखीनां पुरस्तस्याः स्तुतिं कुर्वन्निवेदयेत् ।
स्वाभिप्रायं विनाप्येता नियुञ्ज्यादिङ्गितं प्रति ॥ ३५ ॥

प्रकाश्य दूतीद्वारेण समन्मथमनोरथम् ।
सप्राभृतैः पुनर्लेखैर्वशयेत्तामतन्द्रितः ॥ ३६ ॥

रहस्ये तां समालोक्य वचनैर्मृदुचाटुभिः ।
सविस्मयकलायोगैर्विस्मापयति नायकः ॥ ३७ ॥

व्याधिव्याजमुदीर्य शून्यसदने धात्रीसखीसद्मनि
स्याद्रात्रिभ्रमणे महोत्सवविधौ घोरे भयस्थानके ।
अन्यस्यापि निमन्त्रणेऽथ विपिने किञ्चिद्विविक्तस्थले
प्रायो नूतनसंगमः किल भवेत्सख्या नियुक्तस्तयोः ॥ ३८ ॥

गरीयान्यदि रागः स्यात्प्रार्थिता सा न लभ्यते ।
बन्ध्योपायस्तदा कान्तां निस्तन्द्रः साधयेन्नरः ॥ ३९ ॥

परस्त्रीसंगमोपायो न बुधैरुपदिश्यते ।
परं काव्याङ्गमेतत्तु रुचिरं तन्निगद्यते ॥ ४० ॥

प्रतिषेधवचः स्त्रीणां दुर्लभत्वं च वामता ।
तत्सर्वं कामबाणानां निशितीकरणं परम् ॥ ४१ ॥

कान्तानामभिमानाद्वा भयाद्वा परयोषिति ।
महतामपि रम्यं स्यात्प्रच्छन्नसुरतं यथा ॥ ४२ ॥

निम्ने पर्णकुटीरके विरचिते तल्पेऽथ दर्भाङ्कुरै-
र्ध्वान्ते गाढतरे तडिद्विलसितैर्भीमं घने गर्जति ।
शङ्काव्याकुलितापि वामनयना यामीति जल्पन्त्यपि
प्रायस्तत्र रिरंसति प्रियकृते सङ्केतवासं मनः ॥ ४३ ॥

अथ मानः—

प्रियं प्रतीर्ष्यया यत्र विकारं कुरुतेऽबला ।
स मानस्तु परस्त्रीणां सङ्गदोषाद्भवेद्यथा ॥ ४४ ॥

किञ्चित्कुञ्चितमेव लोचनयुगं बाष्पाम्बुभिर्गद्गदं
गण्डौ पाण्डममण्डितावपि परां धत्तः श्रियं पाटलाम् ।
बिम्बोष्ठस्फुरणं तवाद्य दयिते वाक्संयमश्चाधुना
नो विद्मः किमनुग्रहोऽस्ति घटितः स्वान्तेऽथवा विग्रहः ॥ ४५ ॥

स च त्रिधा भवेत्प्रायो नारीणां कामिनं प्रति ।
यथादोषमवेक्ष्य: स्यादुत्तमो मध्यमो लघुः ॥ ४६ ॥

तत्र गुरुः—

भुक्त्वा सपत्नीमायाते पत्यौ दृष्टे नखाङ्किते ।
स्वयं तत्सवयोगोत्रस्खलिते स गुरुर्भवेत् ॥ ४७ ॥

तिर्यग्वक्रितमेव नेत्रयुगलं भ्रूविभ्रमो भङ्गुर-
श्चण्डः प्रस्फुरिताधरोऽरुणिमतां धत्ते कपोलद्वयम् ।
कोपावेशवशादियं तव दशा मय्यानते पादयो-
र्यद्यागः कृतवांस्तदा भुजलतापाशेन बध्नातु माम् ॥ ४८ ॥

मध्यमः—

प्रिये दृष्टेऽन्यया सार्धमनुरागेण जल्पति ।
यद्वा सख्योदिते दोषे मानः स्यान्मध्यमो यथा ॥ ४९ ॥

कस्मात्ताम्ररसश्रियं सुनयने धत्तस्तरां लोचने
वाणी किं कलकण्ठि निष्ठुरतरा सुभ्रु भ्रुवौ भङ्गुरे ।
मन्तुर्नास्ति मयीति तेन गदिते क्रोधं वृथा मा कृथा
मानिन्याः स्रवदश्रुनेत्रयुगलं चक्रेऽथ तूष्णींस्थितम् ॥ ५० ॥

लघुः—

सानुरागदृशा नाथे परां पश्यति कामिनीम् ।
तस्मिन्नन्यमनस्केऽपि स लघीयान्मतो यथा ॥ ५१ ॥

चेज्जानासि कृतापराधमपि मां तत्पाणिना संस्पृशा-
मीति त्वत्कुचकुम्भमेव तदपि त्वं मन्यसे विप्रियम् ।
लीलातामरसेन तर्जय परं स्वीयं मुखं साश्रुभि-
र्नेत्रैः कज्जलमेचकैः किमु विधौ बिम्बाकृतिं नीयते ॥ ५२ ॥

यः कामिनां तु दुःसाध्यो देशकालबलात्स च ।
कोपः स्त्रीणां भवेत्प्रायः सुखसाध्यो निगद्यते ॥ ५३ ॥

सौधं सुधांशुधवलं रमणीयचित्रं
किञ्चित्कनत्कनकराजिविराजमानम् ।
दीप्तप्रदीपमथ कल्पिततल्परम्यं
क्रीडावनं च कलितं पिककाकलीभिः ॥ ५४ ॥

इत्यादयः प्रदेशास्तु मानिनीनां मनोहराः ।
गरीयसोऽभिमानस्योज्ज्ञासनाय भवन्त्यमी ॥ ५५ ॥

दिक्कान्ताननदर्पणप्रतिनिधिं संवीक्ष्य राकानिशा-
कान्तं सौधशिरःसुधाधवलितं तल्पं दुकूलावृतम् ।
आघ्राय स्फुटगन्धबन्धुरतरान् सन्मालतीगुच्छकान्
तत्याज द्रुतमेव चाटुचतुरे कान्ते स्वयं मानिनी ॥ ५६ ॥

अभ्युद्गते शशधरे मधुमासि रम्ये
जम्भारिमन्मथमहोदयवासरेषु ।
वापीतडागजलकेलिषु मद्यपाने
मानः श्लथत्वमुपयाति मनस्विनीनाम् ॥ ५७ ॥

मुग्धे मन्मथघर्मवारणमिदं पूर्णेन्दुबिम्बं लस-
त्युच्चैः पश्य रसालमञ्जरिमिमां कामेषुमन्वेषय ।
प्रीतौ कः प्रतिघस्तवेति निगदन् पादानतस्तं करे
बिभ्रत्याः सुतनोस्तनुः पुलकिता सिक्तेव हार्दामृतैः ॥ ५८ ॥

प्रत्यग्रदोषसमये वनिताजनस्य
दूतीजनस्य पुरतो लघुरेव कोपः ।
प्रायो गुरुत्वमुपयाति तथैव कामि-
वर्येषु किं तु विषमा विषमेषु रीतिः ॥ ५९ ॥

किमपि चरणपाताच्चाटुवाक्यादपेते
निबिडतदभिमाने किञ्चिदुत्कम्पशून्ये।
स्तनयुगलविभागे प्रीतयाप्यायताक्ष्या
मुहुरनुसृतदूतीं वीक्ष्य कोपो व्यधायि ॥ ६० ॥

चाटूक्तैरपि बाढबाहुजपरीरम्भैर्मुहुश्चुम्बितैः
सान्द्रैः प्रेमवचोभिरम्बुजदृशः स्विन्मन्दिमानं गतः।
अन्यस्त्रीपरिरम्भजातमुरसि स्पष्टाङ्गरागं समा-
लोक्य द्राग्दयितस्य नूतनतरस्तस्याः स रोषोऽभवत् ॥ ६१ ॥

अथ षडुपायाः—

सामदाने तथा भेद उपेक्षा प्रणतिस्ततः।
षष्ठः प्रसङ्गविभ्रंशो न दण्डः शुचिहानिकृत् ॥ ६२ ॥

प्रसादने तु मानिन्या उपायाः षडिमे मताः।
पुरतस्ते निदर्श्यन्ते शुभोदाहृतिसंयुताः ॥ ६३ ॥

अथ साम—

पालनीयस्त्वया कान्ते सापराधोऽपि मादृशः।
एवं सान्त्ववचो यत्र तत्साम गदितं बुधैः ॥ ६४ ॥

मादृक्षः खलु दुर्विनीत इति ते संरक्षणीयो यदा
दोषः कोऽपि च कोपने लघुतरः क्षन्तव्य एवाधुना।
एवं सान्त्वनसूचकानि गदतः पत्युर्वचांस्येतया
नेत्राम्भः प्रशमय्य सस्मितमथो वक्तुं कृतोऽनुग्रहः ॥ ६५ ॥

अथ दानम्—

यत्र तत्तुष्टये दद्याद्दयितो भूषणादिकम्।
किञ्चित्कारणमुद्दिश्य तद्दानमुदितं यथा ॥ ६६ ॥

अयं मुक्ताहारः कुचकनककुम्भे तव शुभे
घटेतेत्युक्त्वा सोऽक्षिपदथ गले पङ्कजदृशः।
तदा रोमोद्धर्षाङ्कुरितवपुरेषा क्रुधमलं
जहौ प्रेयानस्या द्रुतमथ चुचुम्बाधरतलम् ॥ ६७ ॥

अथ भेदः—

यत्र प्रसादितं तस्याः समावर्ज्य सखीजनम् ।
कान्तः प्राप्नोति तद्द्वारा कान्तां भेदः स चोच्यते ॥ ६८ ॥

अक्ष्णोर्लोहितिमानमाशु दधती हस्तद्वयं धुन्वती
मात्रागाः कितवेति कर्कशगिरा संतर्जयन्ती मुहुः ।
आगच्छत्यपि वल्लभे प्रियतमा कोपभ्रमद्भ्रूलता
सख्यावर्जितयैव कोमलगिरा स्वैरं समाश्वासिता ॥ ६९ ॥

अथोपेक्षा—

परार्थपिशुनैर्वाक्यैस्त्यक्त्वानुग्रहसंविधाम् ।
यत्रानुगृह्णते योषिदुपेक्षा सा स्मृता यथा ॥ ७० ॥

हारस्तारतरः स्फुरत्तरमिदं ग्रैवेयकं सुभ्रु ते
रम्यस्ते तिलकः सुकाञ्चनमयी काञ्ची भृशं राजते ।
प्रत्यङ्गं स्पृशता प्रियेण विलसद्रोमोद्गमा तत्क्षणा-
दित्थं मानमुपेक्षयैव शनकैः संत्याजिता मानिनी ॥ ७१ ॥

अथ प्रणतिः—

दैन्यमेकं समाश्रित्य पादयोः पातनात्मता ।
प्रणतिर्वल्लभा सा स्याद्योषितो ललिता यथा ॥ ७२ ॥

काचित्कुङ्कुमपङ्कसंकरलसद्वृत्तोरुपीनस्तन-
द्वन्द्वाङ्कव्यतिषङ्गिपृष्ठमपरस्त्रीसंश्रयं वीक्ष्य तत् ।
भर्तुः पादयुगानतस्य किमपि न्यूनं च शंसद्रसं
कामं संमदमाप तीव्रविरहाल्लोलेक्षणाशु क्षणात् ॥ ७३ ॥

अथ प्रसङ्गविभ्रंशः—

यत्राकस्मात्प्रजायन्ते भयहर्षादिभावनाः ।
स स्यात्प्रसङ्गविभ्रंशः कोपभ्रंशाद्यथोच्यते ॥ ७४ ॥

वल्लभे गदति मे खगो हृदि
स्वित्पपात कृतवाजनिःस्वनः ।

किं किमित्युदितवत्युपाययौ
कोपसंभ्रमभयाकुलाबला ॥ ७५ ॥

प्रसादने बलिष्ठाः स्युरित्युपाया यथोत्तरम् ।
आद्यास्तु भूरिशः कार्यास्त्रयश्चान्त्याः क्वचिद्बुधैः ॥ ७६ ॥

न चोद्वेजयितव्योऽपि कान्तया प्रायशः प्रियः ।
मानोऽपि जातुचित्कार्यः प्रणामोद्भवसिद्धये ॥ ७७ ॥

प्रयुञ्जीतेत्युपायांश्च दयितापि प्रति प्रियम् ।
नोपेक्षेत पुनः क्रुद्धः स्यात्किञ्चित्कारणं परम् ॥ ७८ ॥

न स्यात्प्रेम विना भीतिर्नाभ्यसूयां विना स्मरः ।
द्वयोरपि ततो मानभेदः स्यात्प्रीतिवर्धनः ॥ ७९ ॥

सानुरागा वदेन्नाम भर्तः सुभग वल्लभ ।
दयितेश प्रिय स्वामिन्नाथ चन्द्रास्य जीवित ॥ ८० ॥

अप्रीता मन्त्रयेन्नाम शठ धृष्ट गतत्रप ।
भो दुःशील दुराचार दुर्भगाहित निष्ठुर ॥ ८१ ॥

मानात्कठोरवचनाद्व्यसनोज्झनाच्च
तद्विप्रियस्य करणादनिलोभतश्च ।
प्रायः प्रवासवशतस्तदुपेक्षणाच्च
द्वेष्यो भवेत्प्रियतमः किल कामिनीनाम् ॥ ८२ ॥

अथ प्रवासः—

कुतश्चित्कारणादेव प्रियो देशान्तरं गतः ।
प्रवासः स च विज्ञेयो द्वयोर्विरहकष्टकृत् ॥ ८३ ॥

वाता वान्ति कदम्बपुष्पजपरागामोदमेदस्विनः
सोढास्तेऽपि शिलीन्ध्रकोरकभृतः कच्छप्रदेशा इमे ।
प्रोल्लासात्तडितां तथा कथममी स्फीताम्बराडम्बराः
सोढव्याः स्तनयित्नवः सखि मया कान्तं विना दुर्धराः ॥ ८४ ॥

रम्यस्ताण्डवडम्बरोऽपि शिखिनां केकाभृतां वन्हिसात्
पर्जन्या अपि गर्जितध्वनिभृतस्ते वज्रसादेव मे ।
उद्भिन्नोऽपि कदम्बकोरकचयः सोऽङ्गारसन्दोहसात्
प्राणेशाविरहार्दितस्य सकलं दैवादसह्यं कृतम् ॥ ८५ ॥

चिन्तादौर्बल्यमालिन्यजागर्याव्यग्रतादयः ।
स्त्रीणां स्युर्बहुधात्रापि स्यान्मृतिश्चावधेः परम् ॥ ८६ ॥

शशिकलेव तनुस्तनुतां गता
वरतनोश्चलितेऽद्य धवे भृशम् ।
अहह काम परेऽहनि सायकान्
निगद कुत्र विमोद्यसि निर्दय ॥ ८७ ॥

रूक्षा तेऽलकवल्लरी सुमलिना वेणी किमेणोक्षणे
नेत्रे सुभ्रु निरञ्जने धवलतां धत्तेऽथ बिम्बाधरः ।
पाण्डुच्छायमिदं वपुः स सुभगो दूरे वियोगक्रम-
व्यापत्तापदशा सखीव सुतनोराश्लिष्य या तस्थुषी ॥ ८८ ॥

शङ्के न तत्र रजनी यदि वा न चन्द्रो
नो कौमुदी धवलयत्यथ विश्वविश्वम् ।
किं वा न कोकमिथुनानि विदेशवर्ती
मां प्रेयसीमपि न संस्मरतीह येन ॥ ८९ ॥

शशधर कुरु ज्योत्स्नामच्छां विकासय कैरवं
विधुनु पवन स्मेराम्भोजावलीं प्रसर स्मर ।
शिथिलय कथां तस्याप्यद्यावधिः परिपूरितः
किमपि च परं चेतः कर्तुं ममालि समीहते ॥ ९० ॥

स्युरतो नायकस्यापि दशा विरहसंभवाः ।
कामबाणप्रहाराद्या मा भूवंस्ता रिपोरपि ॥ ९१ ॥

यः प्रेमप्रथिमानमाकलयितुं स्विद्धिप्रयोगद्रवं
जिज्ञासुः प्रणयी निजप्रणयिनीं भेजे वियुज्य स्फुटम् ।

श्रृङ्गारैकरसामृतस्तिमितधीरुद्दामधामाद्भुतः
श्रीसाहिर्जयतादसावकबरो भूपालचूडामणिः ॥ ६२ ॥

इति सकलकलापारीणरसिकसाम्राज्यधुरीण-
श्रीअकबरसाहिश्रृङ्गारदर्पणे तृतीय उल्लासः ॥

---

## चतुर्थ उल्लासः

अथ करुणात्मकः—

यत्रैकस्यात्यये प्रह्वो मृतप्रायो भवेत्परः।
तत्प्रेम प्रलपेत्कान्ता स ज्ञेयः करुणात्मकः॥ १॥

कान्तानां स्मरकेलिचम्पकलता छिन्ना लसद्वल्लकी-
प्रक्वाणः कवलीकृतः पिककलस्वानोऽवकेशीकृतः।
चन्द्रस्यापि च चन्द्रिका विदलिता नैका वराकी रति-
र्निस्नारीकृतमेव विष्टपमिदं कामं घ्नता शंभुना॥ २॥

तन्वङ्ग्या मधुरस्वरः पिककुलैः कैश्यं मयूरव्रजै-
श्चन्द्रेणास्यमुतालिणी च हरिणैः पीनस्तनौ वारणैः।
दोर्लास्यं नवपल्लवैः सुरभिना मन्दानिलर्मालयै-
रेतैर्मे दयिता विभज्य च हृता धाता न किञ्चिन्मम॥ ३॥

प्राणेश मन्मथकृतामियतीमवस्थां
यातोऽसि तामहमहो खलु मन्दभाग्या।
यस्याः कृते त्वपनगामि तवैव मूर्च्छा
सा साम्प्रतं नयननिर्गतवारिपूरः॥ ४॥

न मे तापव्यापत्प्रशमनविधौ चन्द्रशकलं
न वा चन्द्रज्योत्स्ना हृदयमुपगूढं न तदलम्।
पराचीनाद्दैवात्कथमपि च मूर्च्छापरवशा-
धुना जाग्रच्चेता मयि सुतनु संधेहि सुदृशम्॥ ५॥

रतिभावोद्भवामस्यावस्थां विस्मृत्य च द्वयोः।
कारुण्याज्जायते केषाञ्चिदेव करुणाभ्रमः॥ ६॥

दम्पत्योरपि सापेक्षे संगमे च भवेदयम्।
भूयः श्रृङ्गारवचनः सतां च करुणो मतः॥ ७॥

ततः शृङ्गार एवायं कारुण्येनानुभावितः।
कविभिर्गुम्फितो बाढं सुन्दरत्वं प्रकाशते ॥ ८ ॥

अथ सख्यः—

प्रतिवेश्मा नटी चेटी कारुर्धात्री च शिल्पिनी।
बाला तपस्विनीत्याद्याः स्त्रीणां सख्यः स्मृता बुधैः ॥ ९ ॥

वाग्मित्वं स्मृतिरुत्साहो भक्तिश्चित्तज्ञता वचः।
मधुरं नर्मनैपुण्यं कलाभ्यासश्च तद्गुणाः ॥ १० ॥

कौतुकं मण्डनं रक्तोपालम्भोऽथ प्रसादनम्।
सङ्गश्च विरहाश्वासः सखीकर्मेति संस्मृतम् ॥ ११ ॥

कस्यालेख्यमिदं व्यलेखि फलके तन्वङ्गि तत्त्वं वद
व्यामृश्येति मया तदालिवचनं श्रुत्वा दृशालोक्य च।
सा वक्तुं न शशाक चारुनयना लज्जानताङ्गी परं
रोमाञ्चाञ्चितवर्ष्मणा निगदितं मद्वल्लभस्येति तत् ॥ १२ ॥

सध्रीची किमपि प्रसाधनविधिं कृत्वाखिलाङ्गेष्वपि
व्यग्रत्वं समवेक्ष्य मन्मथसमावेशाद्दते चातुरीम्।
नैषालक्तकमण्डनं कृतवती तस्याः पुनः पादयोः
कामिन्यास्तदिमे दुकूलकलिते चक्षुर्निपातं व्यधात् ॥ १३ ॥

चाटूक्तिः प्रवितायते वरयिता गाढं समाश्लिष्यते
भूयश्चुम्बनचुङ्कृतिः क्रियत इत्यस्यैव सौख्यावहम्।
मुग्धे त्वं प्रतिबोधितालिनिवहैर्भर्तुर्व्यवायक्रमे
निष्णाताखिलनर्मकर्मसु परं कामेन संशिक्षिता ॥ १४ ॥

उच्चण्डस्मरघस्मरानलसज्ज्वालावलीढे हृदि
प्रेयस्या विशता त्वया निगदितः प्रेमातिरेकः स्वयम्।
तच्चित्रं किल शीतलेऽपि हृदि ते संतापशान्त्यै चिरं
विश्रम्यात्र वयस्यया मम पुनर्निस्नेहया न स्थितम् ॥ १५ ॥

सुभग कुरु मे वाक्यं मुञ्च क्रुधं निजवल्लभां
प्रणयकलहव्यग्रां कामं स्मरज्वरजर्जराम् ।
अनुनय न चेदेकाकिन्यप्यसौ हिमदीधिति-
प्रखरकिरणैर्यास्यत्युच्चैर्बलादपि पञ्चताम् ॥ १६ ॥

अमुकपुरुषमत्राहं दधे वृक्षबुध्ने
निभृतमिह युवाभ्यां स्थेयमानन्दवद्भ्याम् ।
रहसि सुरतकेलिं कुर्वतोः कामिनोः सा-
गमदपरलतौघं चेत्युदित्वा वयस्या ॥ १७ ॥

वामं यत्तव सुभ्रु लोचनमिदं भूयः स्फुरत्युच्चकै
रोमाञ्चश्रियमातनोति नितरां वक्षोजयुग्मं पुनः ।
उत्कम्पं भजते यदूरुयुगलं रम्भाप्रकाण्डोपमं
तन्मन्ये प्रियसंगमं निगदति प्रायोऽद्य सद्यस्तराम् ॥ १८ ॥

सख्य इत्यादिकं कर्म कुर्वाणा योषितां सदा ।
संभवन्ति रहोमन्त्रविज्ञाननिपुणाः प्रियाः ॥ १६ ॥

शृङ्गार एष कविभिः किल नव्यकाव्य-
बन्धेषु सुन्दरतया ननु वर्णनीयः ।
एतेन हीनमपि किं च कवेः कवित्वं
नैरस्यमेव तृणपूरुषवद्भजेत ॥ २० ॥

वर्णयामः कथं नाथ भवत्प्रेमानुषङ्गताम् ।
यत्त्वया प्रापिता संस्थां कान्तैकापि शुभात्मना ॥ २१ ॥

अथ हास्यः—

वचोऽङ्गवेषवैकृत्याद्धासमूलात्प्रजायते ।
पात्रत्रयगतो ज्ञेयो रसोऽयं हास्यसंज्ञितः ॥ २२ ॥

स त्रिविध उत्तमो मध्यमोऽधमश्च । तत्र उत्तमः—

ईषद्विकस्वरैर्गण्डैरीषद्विकचलोचनैः ।
ईषद्भिन्नोष्ठदशनस्त्रिधा स्यादुत्तमेषु सः ॥ २३ ॥

भाले लोचनमुज्ज्वलज्ज्वलनभृत्पाणौ लसत्कङ्कणं
वस्त्रं चार्द्रगजाजिनं निगरणे हालाहलालंकृतिः ।
शेषः शेखर एष वेषरुचिरः संमोहनार्हो वरः
सत्यं चण्डि तवेति शंभुरुदितः सोल्लासहासोऽवतात् ॥ २४ ॥

प्रायो विदीर्णवदनो मध्यमानां भवेदयम् ।
अधमानां पतद्बाष्पो दूरादुच्चध्वनिः स तु ॥ २५ ॥

अथ मध्यमः—

कान्तेऽद्यापि न वेत्सि मन्मथरसव्यापारमार्गं मनाग्
दष्टः पङ्कजलोचने त्वदधरो भृङ्गेण न प्रेयसा ।
सख्येत्थं हसिते वधूः प्रमदतः सोल्लासहासस्फुट-
द्वक्त्रोद्यन्मधुगन्धलुब्धमधुपैरुद्धाविता तां प्रति ॥ २६ ॥

अथाधमः—

गुञ्जाहारमपास्य मौक्तिकलता कण्ठे कृता किं तरां
त्यक्त्वा बर्हिणबर्हमम्बुजमहो कर्णावतंसीकृतम् ।
इत्थं साहिशिरोमणे अकबर त्वद्वैरिनारीगणः
कान्तारे शबरैर्विलोक्य निपतद्बाष्पेक्षणो हस्यते ॥ २७ ॥

स्यान्मित्रपाणिघातोऽत्र मुखरागोऽङ्गवर्तनम् ।
घ्राणगण्डकृतस्पन्दो नेत्रोल्लासः प्रजायते ॥ २८ ॥

अथ करुणः—

शोकात्मा करुणः प्रेष्ठधनभृत्यक्षयाद्भवेत् ।
निर्वेदबाष्पवैवर्ण्यप्रलापात्मात्र नायकः ॥ २९ ॥

प्रेयान्मे सह बान्धवैर्मृतिमगाद्युद्ध्वा रणप्राङ्गणे
वैधव्येन दुनोति मुग्धवनिताचेतांसि सैषा वधूः ।
दुस्त्याज्योऽङ्कगतः शिशुः किमु कृतं दैव त्वया त्वद्द्विषः
कान्ता साहिशिरोमणे अकबरोदित्वेति मूर्च्छामगात् ॥ ३० ॥

वर्णनीयोऽत्र भूपातो दीनवाक्यं च रोदनम् ।
दैवनिन्दा प्रहारश्च देहस्येत्यादिको बुधैः ॥ ३१ ॥

अथ रौद्रः—

अतिक्रोधात्मको रौद्रो भवेच्छत्रुपराभवात् ।
नायकोऽत्र भवेदुग्रः सामर्षो भीष्मविग्रहः ॥ ३२ ॥

उद्युक्तैर्युधि बाहुजैर्जनयिता यैर्मेऽत्ययं प्रापितो
रामामप्यपहाय वीर्यकलितो रामाह्वयोऽहं द्विजः ।
तेषां ज्वालकरालकालपरशुत्रुट्यच्छिराणां द्विषां
सद्यः शोणितपूरितेऽथ सवनं कर्तास्मि तीर्थे ध्रुवम् ॥ ३३ ॥

रौद्रानुभावः—

शत्रुद्वेपास्यलौहित्यस्वेदकम्पाधरग्रहाः ।
भृकुटिः पाणिघातोऽत्र जायते शक्तिशंसनम् ॥ ३४ ॥

अथ वीरः—

स्यादुत्साहमयो वीरो दयादानरणोद्भवः ।
नायकः सत्त्वसंपन्नस्त्रिविधोऽत्र प्रजायते ॥ ३५ ॥

शौर्यौदार्यगभीरत्वधैर्यादिगुणसंयुतः ।
आवर्जितजनो नेता भवेत्प्रौढपराक्रमः ॥ ३६ ॥

अथोत्तमवीरः—

शेषः कूर्मयुतो बिभर्ति वसुधां विश्वंभरः केशवः
शंभुर्ब्रह्मसहाय एव विदितः सत्त्वे निबद्धस्थितिः ।
एकः शूरशिरोमणिर्निजभुजेनैकेन धत्ते भुवं
श्रीसाहिर्जयतादसावकबरः खड्गोग्रधाराभृता ॥ ३७ ॥

अथ मध्यमः—

नूनं त्रिविक्रम जगत्त्रयमात्रलाभ-
संतोषतो नु मुदितोऽसि यतोऽधिकार्थम् ।
नाभ्यर्थितो बलिरहं भवतापि खर्व-
रूपेण वाञ्छितमनोरथदानशौण्डः ॥ ३८ ॥

अथाधमः—

यस्मिन्नभ्रमुकान्तदन्तमुसला मूलात्पमुन्मूलिता
ज्वालाजालजटालमेव भिदुरं विध्मातमाश्लिष्य माम् ।
हंहो वृत्ररिपो तदेव भवतः किं विस्मृतं संयुगं
चेदद्यापि चिकीर्षसि प्रतिभटः सज्जोऽस्मि लङ्केश्वरः ॥ ३६ ॥

तदनुभावः—

अत्रौद्धत्यं धृतिर्मानरोमाञ्चस्मृतिबुद्धयः ।
भवन्ति वचनाक्षेपामर्षवेगाश्च निश्चितम् ॥ ४० ॥

अथ भयानकः—

शब्दादेर्विकृताद् घोरवस्तुसंदर्शनादपि ।
भयानको भवेन्नेता बालः स्त्री कातरः पुनः ॥ ४१ ॥

बालो गभीरमुरजध्वनिमालिलिङ्ग
मातुर्गलं समुपकण्ठ्य विसारिबाहुः ।
प्रांशूत्करव्यतिकरग्लपिताङ्गशोभः
शोभां बभार परमामपि भीतभीतः ॥ ४२ ॥

मानिन्या रतरङ्गसंगरविधौ पादानतोऽपि प्रियः
प्रेमप्रायवचांसि यः प्रणिगदन् क्रोधान्धया धिक्कृतः ।
सोऽप्यम्भोधरगर्जितर्जितधिया शम्पानिपातोत्कया
संश्लिष्टः स्वयमेव बाहुलतया हित्वाभिमानं तया ॥ ४३ ॥

अथ नीचभयानकः—

दरभरोत्थितवेपथुविद्रुत-
श्रमजलाक्ततनूभिरुपद्रुतैः ।
अकबरेश नरेश तवारिभि-
र्वदनदत्तकरैर्वनितायितम् ॥ ४४ ॥

तदनुभावः—

करपादादिकम्पोऽत्र त्रासो वैवर्ण्यमश्रु च ।
भवन्ति स्वेदहक्प्रेक्षामुखशोषाः ससंभ्रमाः ॥ ४५ ॥

अथ बीभत्सः—

जुगुप्सात्मा तु बीभत्सः स्यादहृद्यस्य दर्शनात् ।
श्रवणात्कथनाद्वा पूतिगन्धादिवासितात् ॥ ४६ ॥

दुर्गन्धप्रचुरकलेवरं वसासृ-
ग्बीभत्सं कुणपसमूहभीषणं तत् ।
भ्राम्यद्भिः पतगगणैर्विरूपमुच्चै-
र्दुर्दर्शं पितृवनमाततान शोभाम् ॥ ४७ ॥

तदनुभावः—

घ्राणस्याच्छादनं देहसंवृतिर्मुखकूणनम् ।
निष्ठ्यूतिः स्याद्घृणा चात्र महोद्वेगान्महत्स्वपि ॥ ४८ ॥

अथाद्भुतः—

विस्मयात्माद्भुतोऽपि स्याद्रसोऽसंभाव्यवस्तुनः ।
मायेन्द्रजालदिव्यस्त्रीविपिनादेश्च दर्शनात् ॥ ४९ ॥

खचर त्वया हृताहं मायां निजविद्यया वितत्य मयि ।
प्रभवसि मनसि न विकृतिं कर्तुं तदलं मुधा क्लेशः ॥ ५० ॥

तदनुभावः—

अत्र नेत्रविकासः स्याद्गद्गदः साधुवादता ।
स्वेदरोमाञ्चकम्पाश्च दृशो निश्चलतारता ॥ ५१ ॥

अथ शान्तः—

सम्यग्ज्ञानसमुद्भूतः शान्तः सर्वत्र तुल्यदृक् ।
निस्पृहोऽत्र भवेन्नेता रागद्वेषक्षयाद्यथा ॥ ५२ ॥

सान्द्रप्रेमरसार्द्रयौवनरतिः स्वैरं कृता संमदाद्
दत्तं भूरि धनं यथारुचि तथा पात्राय वित्तार्थिने ।
विस्फूर्जत्करवालकालनिहतो दुर्वैरिवीरव्रजः
कृत्यं नः किमतः परं किल परब्रह्मैकतानात्मनाम् ॥ ५३ ॥

तदनुभावः—

निर्विकल्पं मनो गाढं यत्रात्मन्यधितिष्ठति।
सुखे न हर्षो नामर्षो दुःखे शान्तरसः स तु ॥ ५४ ॥

अथ विरोधिरससमावेशः—

पूर्वमुक्ता रसा येऽष्टौ मिथस्तेषु विरोधिनौ।
द्वौ द्वौ रसौ तयोः प्राज्ञः संसर्गं वर्जयेदिह ॥ ५५ ॥

मिथः शृङ्गारबीभत्सौ रसौ वीरभयानकौ।
रौद्राद्भुतौ तथा हास्यकरुणौ च विरोधिनौ ॥ ५६ ॥

शृङ्गाराच्च भवेद्धासो वीराद‌द्भुतसंभवः।
भयानकस्तु बीभत्साद्रौद्राच्च करुणो रसः ॥ ५७ ॥

बुधैर्यौ जन्यजनकौ रसौ निगदितौ मिथः।
तयोर्युक्त्यापि संभेदः कृतः प्रायो न दुष्यति ॥ ५८ ॥

अथ भावाः—

पूर्वं रसेषु ये भावाः संक्षिप्योक्ता विभागशः।
स्वतन्त्रतोऽपि ते चात्र वर्ण्यन्ते संमताः सताम् ॥ ५९ ॥

एते रत्यादयो भावा रसाभिप्रायसूचकाः।
स्थायिसात्त्विकसंचारिभेदैः पञ्चाशदेव ते ॥ ६० ॥

चित्ते न संस्थिते भावाः संकीर्णाः संभवन्त्यपि।
प्रायो रत्यादयो यद्वत्तथाप्येते निरूपिताः ॥ ६१ ॥

स्मृतिर्धृतिर्भयं चिन्तासूयाशङ्कारुजामुदः।
ग्लानिश्च विस्मयौत्सुक्ये लज्जोन्मादौ रतिस्तथा ॥ ६२ ॥

जाड्यं विषादश्चापल्यमवहित्था मतिस्तथा।
निद्रेति भावाः शृङ्गारे बोद्धव्या व्यभिचारिणः ॥ ६३ ॥

चापल्यं च श्रमो निद्रा ग्लानिः स्वप्नोऽप्यसूयया।
युक्ता शङ्कावहित्थेति भावा हास्ये भवन्त्यमी ॥ ६४ ॥

निर्वेदो जडता चिन्ता ग्लानिर्दैन्यं रुजा धृतिः ।
एते भावाः प्रयोक्तव्याः करुणे भावकोविदैः ॥ ६५ ॥

प्रमोदो गर्व उत्साहोऽसूया चापल्यमुग्रता ।
मदो वेग इमे भावा रौद्रे ज्ञेया विचक्षणैः ॥ ६६ ॥

प्रतिबोधस्तथामर्षोऽसूया क्रोधो धृतिर्मतिः ।
वितर्कश्चाश्रुसंमोहो हर्षशोकौ मदस्मयौ ॥ ६७ ॥

आवेगश्च तथोग्रत्वं वीरे भावा इमे स्मृताः ।
वचनीयं च संत्रासो मरणं स्युर्भयानके ॥ ६८ ॥

भयं विषादोऽपस्मारो रोगोन्मादौ मतिर्मदः ।
बीभत्ससंभवा विद्भिर्भावास्त्वेते प्रकीर्तिताः ॥ ६९ ॥

जाड्यं मोहस्तथावेगो मतिर्हर्षश्च विस्मयः ।
इति भावा निगद्यन्ते रसे कविभिरद्भुते ॥ ७० ॥

संचारिण इमे ज्ञेया भावाः प्रतिरसं श्रिताः ।
सात्त्विका एत एव स्युः सर्वेऽखिलरसाश्रयाः ॥ ७१ ॥

अथ रीतयः—

स्युः कौशिकी चारभटी सात्वती भारतीत्यपि ।
चतस्रो रीतयश्चैता रसावस्थितिसूचकाः ॥ ७२ ॥

यस्यां लास्यविलासभङ्गिरचनागीतस्तुतिः प्रस्तुता
स्त्रीणां विभ्रमहावभावकलितं सम्भोगशर्मोदितम् ।
देशाङ्गस्तुतिचारुबन्धमधुरा श्लोकैः समासैरियं
विद्वद्भिर्गदिता सुगुम्फरुचिरा रीतिर्ध्रुवं कौशिकी ॥ ७३ ॥

एषा शृङ्गारकरुणहास्यानां वृद्धये बुधैः ।
वृत्तिर्यत्नात्प्रयोक्तव्या संदर्भललिता यथा ॥ ७४ ॥

त्वद्बिम्बाधरखण्डनं कृतमिदं भर्त्रा बिभर्ति श्रियं
मुग्धे च्छादय दाडिमीफलधिया दष्टा कदाचिच्छुकः ।

यद्वा प्रेमसुधाम्बुधेरिव तरी पञ्चेषुबाणव्रणः
किं वा ते खमयडतं स्तनतटे तच्चांशुकेनावृणु ॥ ७५ ॥

अथारभटी—

यस्यां शस्त्रविदारितप्रतिभटं संकीर्त्यते संयुगं
भ्रान्ताढ्यं प्लुतलङ्घितादिकरणं मायेन्द्रजालादिकम् ।
दुर्विज्ञेयपदार्थसार्थकलिताथौजस्विवर्णाद्भुता
वृत्तिः सारभटी बुधैर्निगदिता भूयःसमासाकुला ॥ ७६ ॥

इयं तु विबुधै रौद्रे बीभत्सेऽथ भयानके ।
प्रायः शोभाकरी वृत्तिर्महाकाव्ये प्रयुज्यते ॥ ७७ ॥

प्रासप्रोतचलद्गिरीन्द्रसदृशप्रोद्दामदन्तावल-
त्रुट्यत्कुम्भतटावटप्रकटितव्यासक्तमुक्तागणम् ।
सक्रोधप्रतियोधरोधनिपुणस्फूर्जत्कृपाणैर्भटैः
शस्त्राशस्त्रि गदागदि प्रववृते भीमं मिथः संयुगम् ॥ ७८ ॥

नाम्भोदस्तनितं त्विदं रणरणत्तूर्यं न विद्युल्लता
तस्यासिर्जलदा न मेचकरुचो गम्भीरघोषा गजाः ।
इत्थं साहिशिरोमणे अकबर त्वद्वैरिनारीगणो-
ऽरण्ये त्रस्यति नश्यतीति निगदन् धाराधरस्यागमे ॥ ७९ ॥

मांसं चिखादिषति शोणितपूरमुच्चै-
स्तृष्णाक् पिपासति पुरस्तदसौ विकर्षन् ।
भ्रश्यत्कबन्धकलिते समराङ्गणे द्राक्
फेरुः सफेत्कृतिमुखः किल बम्भ्रमीति ॥ ८० ॥

अथ सात्वती—

हर्षोत्कर्षपरा महाद्भुतरसप्राया च सत्त्वाधिका
त्यागोद्रेकवती मनोहरतरोदारैश्च वाचां चयैः ।
माधुर्यादिगुणैरुपेतवचना संदर्भशुद्धिं दध-
त्येषा वृत्तिरुदाहृता कृतमुखैः श्रव्या सतां सात्वती ॥ ८१

एषा नात्यन्तगूढार्था शब्दसंदर्भबन्धुरा ।
वीरे रौद्रेऽद्भुते शान्ते प्रायो वृत्तिः प्रयुज्यते ॥ ८२ ॥

त्वं विष्णोः शयनाश्रयो जनयिता लक्ष्म्यास्तथैवाकरो
रत्नानां सिकताश्च शुक्तिजगणास्त्वय्येव गम्भीरिमा ।
मर्यादा वचनातिगा जलनिधे किं वर्णयामः परं
त्वत्तीरेऽपि तृषा न शाम्यति यतः पान्थस्य तद्गर्हितम् ॥ ८३ ॥

सद्यस्त्रीणि जगन्ति पाण्डुरयति त्वत्कीर्तिरेषामला
मित्राणामरुणीकरोति वदनान्यापाण्डुगण्डान्यपि ।
तच्चात्यद्भुतमेव यत्कृतवती श्यामानि तानि द्विषां
श्रीमत्साहिशिरोमणे अकबर त्वां वर्णयामः कथम् ॥ ८४ ॥

खड्गव्यग्रकरोग्रवीरनिवहैरुद्दारितारिव्रज-
त्रुट्यत्कन्धरसिन्धुरस्रवदसृक्पूरैः प्रवाहायितम् ।
आसारायितमत्र बाणविसरैः शम्पायितं चासिभिः
प्रावृट्काल इवाबभावकबर त्वत्सैन्यशूराहवः ॥ ८५ ॥

यौवनं विगलितं मनोरमं
सार्धमेव विषयेच्छया गतम् ।
ब्रह्मशर्मजलधौ मनोऽधुना
स्नातुमेव किल नः समीहते ॥ ८६ ॥

अथ भारती—

मुख्यनायकमाश्रित्य या सद्वक्रोक्तिबन्धुरा ।
वीरहास्याद्भुतैराढ्या वृत्तिः सा भारती मता ॥ ८७ ॥

उत्पादात्ययविघ्नसावधरुजादुःखादिकं यत्परैः
स्यात्साधारणमेतदेव सकलं प्रायः सतामप्यहो ।
प्रोन्मत्तद्विपकर्णतालतरलाः शुभ्रातपत्रश्रियो
नूनं निश्चलतां भजन्त इह तद्धेतुः परं साहसम् ॥ ८८ ॥

सुरक्षितस्येति यशोदया हरे
र्जगत्त्रयीरक्षणादक्षवर्चसः ।

बभौ प्रवालस्थितमौक्तिकप्रभं
शिशोः स्मितं किञ्चिदुदञ्चिताधरम् ॥ ८६ ॥

निर्भयोऽप्यकबरेश्वरो भयं
यद्ददौ समिति वैरिणां हठात् ।
तेष्वगाद्धवलं यशः स्वयं
चित्रमत्र समुपाददे तराम् ॥ ९० ॥

इत्थं महाकविविनिर्मितनव्यकाव्य-
बन्धान् विलोक्य सदलंकरणैरुपेतान् ।
वृत्तीरिमाः समवगम्य रसप्रयुक्ताः
काव्यं महाकविरसौ विदधीत रम्यम् ॥ ९१ ॥

अथ काव्यदूषणानि—

प्रत्यनीकं च विरसं दुस्संधानरसं पुनः ।
नीरसं पात्रदुष्टं च काव्यं शिष्टैर्न शस्यते ॥ ९२ ॥

प्रत्यनीकरसमाह—

तस्याः स्मरामि वदनं हरिणेक्षणायाः
स्फूर्जत्क्षतजपूतिपरीतगण्डम् ।
रत्युत्सवस्य समये किल काव्यमेतत्
स्यात्प्रत्यनीकरसमाद्यबुधैर्निषिद्धम् ॥ ९३ ॥

मातृमृत्युशुचं हित्वा मायामानय यौवनम् ।
मुधा सुन्दरि मा रोदीरित्यादि विरसं भवेत् ॥ ९४ ॥

एक एव रसो यत्र ग्रन्थे गाढं निबध्यते ।
नैरन्तर्येण तत्केचित्प्राहुर्विरससंज्ञितम् ॥ ९५ ॥

त्वं याहि तामनुचितां ज्वलिता या तव कृते कृतं मूढ ।
मयि चाटुकार वचनैस्तद्दुःसन्धानरसमाहुः ॥ ९६ ॥

विद्वेषी वल्लभो मानी म्लानो मान्यो युवा कृशः ।
तस्या विरहतप्तायाः काव्यमित्यादि नीरसम् ॥ ९७ ॥

रतिप्रगल्भा कन्येयं नित्यं रुष्टा कुलाङ्गना।
निर्व्याजं गणिका मूढा पात्रदुष्टं स्मृतं बुधैः॥ ९८॥

एवमन्यरसेष्वेते दोषा वर्ज्या विचक्षणैः।
संसर्गतो भवेद्येषां कवित्वमपि नीरसम्॥ ९९॥

अनेन पदचातुरीनियतनायिकालक्षण-
स्फुरन्नवरसोल्लसल्लवणिमप्रबन्धेन तु।
अनङ्गरससंगरप्रथितमानमुद्रावतीं
प्रसादयतु भामिनीमकबरेश्वरोऽहर्निशम्॥ १००॥

यद्यस्ति काव्यरचनासु रुचिर्विदग्धा
नानारसेषु रसिकत्वकुतूहलं वः।
तत्पद्मसुन्दरकविग्रथितं सुरम्यं
शृङ्गारदर्पणमुपाध्वमदुष्टचित्ताः॥ १०१॥

इति सकलकलापारीणरसिकसाम्राज्यधुरीण-
श्रीअकबरसाहिशृङ्गारदर्पणे चतुर्थ उल्लासः॥

---

APPENDIX

# शृङ्गारसंजीविनी

सासूयं करपल्लवे गिरिजया प्रत्याहृते कङ्कणा-
दुद्ग्रीवस्य फणीश्वरस्य फणया विस्फारया योजितः।
संध्यावन्दनशालिनः पशुपतेरानन्दबाष्पाम्बुभिः
प्रव्यक्तं परिपूरितो वितरतु श्रेयांसि तोयाञ्जलिः॥ १॥

रक्षाबन्धनकैतवेन हरिणा लक्ष्म्याः कराम्भोरुहे
स्पृष्टे दन्तुरिता विरूढपुलकैरन्योन्यमासीत्तनुः।
प्रत्यङ्गं जडता परस्परमभूदित्थं मनोजो महा-
साम्राज्यं समुपागतो वितरतु श्रेयांसि भूयांसि वः॥ २॥

सृष्टिः काचन मान्मथी विजयते यस्याः प्रसादादभू-
दम्भोजोपरि नालसंगतिरथाकाशे सुमेरुस्थितिः।
लावण्यस्फुरदम्बुकम्बुशिखरे चन्द्रोदयो वर्तते
तस्मिन्नेव तमांसि तेषु रुचिरा तारावलिः खेलति॥ ३॥

आयान्त्या मन्दमन्दं मदननरपतेः कीर्तिमुल्लासयन्त्या
कुन्दस्फीतस्मितौघैः करकमलचलत्कङ्कणाक्वाणगीतैः।
कालिन्दीलोलदिन्दीवररुचिरदलद्रोणिविद्रोहिदृष्ट्या
दृष्टः स्वैरं युवत्या न भवति स पुमान् यो न धैर्यं जहाति॥ ४॥

साकूतं सकुतूहलं सचकितं सोत्कण्ठितं सत्वरं
सोत्कम्पं सचमत्कृतं सहसितं सप्रेम सानन्दितम्।
राधाया दलितेन्द्रनीलशकलश्यामाभिरामे हरौ
दूरादेव पतन्ति पङ्कजदलद्रोणिद्रुहो दृष्टयः॥ ५॥

सत्रासा इव सालसा इव लसन्माध्वीकमत्ता इव
प्रेमार्द्रा इव गर्विता इव सुधासिन्धौ निमग्ना इव।

गोधुग्वंशनतभ्रुवामनुदिनं दृष्टेऽपि दामोदरे
दूरादेव पतन्ति दुस्तरचमत्कारस्पृशो दृष्टयः ॥ ६ ॥

ईषद्वक्रितकण्ठनालमतुलव्यावृत्तवक्त्रद्युति
व्याभुग्नस्तनचक्रवालविलुठद्वेणीविलासस्थिति ।
पश्चान्मन्दमुपेयुषि प्रियतमे तस्याः पतन्ति द्रुतं
भृङ्गाकर्षितकेतकीनवदलद्रोणिद्रुहो दृष्टयः ॥ ७ ॥

काञ्चीकङ्कणकिङ्किणीकलरवव्याजादुदारं यशो
गायन्त्या मकरध्वजस्य पुरतो यान्त्याः सखीभिः सह ।
दुग्धाम्भोधितरङ्गसंगतिनटन्नीलोत्पलस्पर्धिनी
दृष्टिर्यत्र पपात सुन्दरदृशो धन्यं तदीयं जनुः ॥ ८ ॥

कन्दर्पस्य जगज्जयाय नृपतेः प्रस्थानमातन्वतो
भृङ्गे गायति कोकिले च पठति प्रोद्दामकामस्तवम् ।
दीर्घा चञ्चलमालिका विरचिता विस्फूर्जदिन्दीवर-
श्रेणिश्यामललोचनाञ्चलचमत्कारैरुदारश्रिया ॥ ९ ॥

उन्मीलन्मकरध्वजक्षितिपतिप्रौढप्रसादोदयः
स्वैरं हन्त यथा यथा वरतनोराविर्भवत्यादरात् ।
नूनं तत्र तथा तथा नयनयोरासीदहो वक्रता
तन्मन्ये बत वैभवे सति नवे कस्यास्ति न व्युत्क्रमः ॥ १० ॥

जृम्भारम्भविधौ सरोरुहदृशा चक्रीकृता दोर्लता
नूनं कुण्डलितं मनोजनृपतेः कोदण्डमुद्वेल्लति ।
नो जाने नयनारविन्दविगलद्बाष्पाम्बुवक्त्रानिल-
व्याजाद्वारुणमारुतास्त्रनिवहाः कस्मिन्पतिष्यन्त्यमी ॥ ११ ॥

उन्मीलत्कुचमानमद्वलि दरप्रव्यक्तनाभीह्रदं
विस्रस्ताञ्चलचक्रवालमतुलस्वेदार्द्रगण्डस्थलम् ।
जृम्भारम्भविजृम्भिताधरदलं सोत्कम्पिनेत्रोत्पलं
दूरादुन्नतबाहुदीर्घलतिकं कुम्भस्तनी जृम्भते ॥ १२ ॥

पादाङ्गुष्ठनिपीडितक्षितितलं विस्रस्तचेलाञ्चलं
व्यालोलत्कुचमण्डलं दरगलन्नीवीनिबन्धस्थलम् ।
उद्यद्दोर्लतमुन्नमन्मुखविधुव्यक्ताक्षिपङ्केरुहं
दूरादुन्नतदाडिमीफलमियं हर्तुं समाकाङ्क्षति ॥ १३ ॥

व्यालोलत्कुचभारभङ्गुरनमन्मध्यं वलत्कुण्डलं
विस्फूर्जन्मुखमण्डलं प्रविलसद्व्यालोलनेत्रोत्पलम् ।
काञ्चीकङ्कणकिङ्किणीरणरणत्काराभिरामक्रमं
लोकानां मनसीव कापि सुदती रङ्गे चिरं नृत्यति ॥ १४ ॥

एकान्ते मिलितापि पङ्कजमुखी मत्संमुखीने पथि
स्पृष्टा शङ्कितमानसेन न मया मूढेन मन्दात्मना ।
मेने मामनभिज्ञमेव किमियं सावज्ञमेवाथवा
मन्ये दुर्विधिचेष्टितैरुभयथा कामाय दत्तोऽञ्जलिः ॥ १५ ॥

यान्ती बन्धुजनेन साकमथ मामाकस्मिकाभ्यागतं
दृष्ट्वा दर्शितपीवरस्तनतटोन्मीलन्नखाङ्कावलिः ।
सा केनापि मिषेन पङ्कजमुखी स्थित्वा सखीसंनिधौ
सव्याजं यदुवाच साचिवदना तत्केन विस्मार्यते ॥ १६ ॥

प्रत्यग्भूधरशेखरोपरिलसत्काश्मीरगौरद्रव-
द्रोहोद्रेकमहोर्मिमांसलतनौ ग्रीष्मोग्रभानौ स्थिते ।
स्नातुं सिन्धुतटे घटे निवसनं धृत्वा यदुद्ग्रीवया
सातङ्कं मुहुरीक्षितं प्रतिपदं भूयस्तदाशास्महे ॥ १७ ॥

उन्मीलन्मकरन्दबिन्दुमसकृत्पीत्वा वसन्तोत्सवे
कामं गायति षट्पदे घनमदे कन्दर्पकीर्तिव्रजम् ।
नास्ते मञ्जुपतञ्जिका न शरधिर्नो वा शरश्रेणयो
भ्रूवल्लीधनुषैव सुन्दरमुखी जेतुं जगद्वाञ्छति ॥ १८ ॥

अहं शङ्के पङ्केरुहमुखि कठोरं मृगदृशो
भृशं वक्षो नूनं भवति बत वक्षोजवदिदम् ।
वियोगव्यापारव्यथितमपि मां मानमधुना
परित्यज्य त्रातुं कथमपरथा न प्रभवसि ॥ १९ ॥

उदेति त्वद्वक्त्रे विजयिनि सुधांशोरपि मुधा
विधानं निर्लज्जा जगति जलजश्रीरुदभवत्।
अहं मन्ये धन्ये त्वदधरसुधामेव विबुधा
ह्यलब्ध्वा दुग्धाब्धेर्मथनममृतार्थं विससृजुः ॥ २० ॥

यस्यास्त्वं तरलीकरोषि मुरलीनादेन चेतो जवा-
दौत्सुक्येन चरीकरीषि मकरीमुद्रां च वक्षोजयोः।
कालिन्दीलहरीविवर्तिशफरीतुल्याक्षिलक्ष्म्या यया
श्रीजाने विजरीहरीषि विजने धन्यं तदीयं जनुः ॥ २१ ॥

सुखं शेषे शय्यामहमिव न पर्याकुलमति-
र्न वा दीर्घं दुःखं व्रजसि रजनीजानिकिरणैः।
अहं मन्ये धन्ये त्वमसि सुखिनी तेन सखि यत्
भवत्या साकूतं सकृदपि न दृष्टो यदुपतिः ॥ २२ ॥

दत्तं वामपदं तयैव सकलक्षोणीं मुहुर्मस्तके
तस्या एव मृगीदृशः सुबहुशः सौभाग्यमुन्मीलति।
सैवास्ते परदैवतं च मदनाराध्यं समाध्यन्तरे
या युष्माभिरखण्डितेन सहजप्रेम्णा समालोकिता ॥ २३ ॥

सद्वृत्तः शुचिरुज्ज्वलो गुणगणग्रामोऽभिरामो रुचा
हारोऽयं हरिणाक्षि ते कुचतटीमालिङ्ग्य निद्रायते।
युक्तं तत्सदृशानुरागरसिके काचस्तु पाणिग्रहं
यल्लेभे मलिनोऽप्यनीदृशगुणस्तन्मे मनः कृन्तति ॥ २४ ॥

क्षिप्तस्याप्यनले मनागपि मुखे मालिन्यमालक्ष्यते
नो यस्याम्बुनिमज्जितस्य न मया वैवर्ण्यमालोकितम्।
लोहैरप्यथ ताडितस्य न तनौ संकोचलेशोऽप्यभू-
दस्याः स्वर्णमणेरुरोजयुगले युक्तैव तस्य स्थितिः ॥ २५ ॥

सेहे वातजलप्रपातलवनप्रोत्तापजातव्यथां
पश्चादस्थिवियोजितोऽथ मृदितो यन्त्रे चिरं भ्रामितः।
कार्पासो गुणतामवाप्य सहसा जातः स्वयं कञ्चुकी
वक्षोजौ परिरब्धुमेष कृतवान् किं किं न कर्माद्भुतम् ॥ २६ ॥

अजनि रजनिरेषा दण्डमात्रावशेषा
रमणमिलितयोषादीर्घरोषाय नूनम् ।
अभिनवकरशाली लक्ष्यते भानुमाली
तदपि न वनमाली दृश्यते किं निदानम् ॥ २७ ॥

पुरा मुरारेरियमङ्गसङ्गा-
दनङ्गरङ्गाधिकसंगरेषु ।
गता निमेषादिव सैव दोषा
दुर्दैवदोषादिह दैर्घ्यमेति ॥ २८ ॥

स्नेहेन पूर्णमभितो हृदयं मदीय-
मिन्दीवरोदरसहोदरचारुदृष्टे ।
त्वद्विप्रयोगदहनेन विदह्यमानं
यद्भस्मसान्न भवतीति विचित्रमेतत् ॥ २९ ॥

वियोगे तन्वङ्गी तव नवकुरङ्गीदृगभितो
मुहुर्दृष्ट्वा देहं निखिलगुणगेहं यदुपते ।
न लेभे विश्रामं कथमपि निकामं तदधुना
विधौ वामे बन्धोः परिषदपि वामेव भवति ॥ ३० ॥

विधुंतुद विधुं तुद त्वमसि मित्र तत्र क्षमो
नमोऽस्तु भवते हर प्रहर पञ्चबाणं रणे ।
भवान् गिरतु पन्नग त्वरितमाशु मन्दानिलं
कुलं विरहिणामहो यदधुनैव संशाम्यति ॥ ३१ ॥

बाला हालाहलमिव विधुं मन्यते धन्यकान्ति
तान्ति लेभे मधुकररुतैरुद्धतैः सर्वतोऽपि ।
उद्विग्नाभूदहह कमलैर्निर्मलैरानताङ्गी
संगीतेन व्यथितहृदया निर्दयासीद्वियोगे ॥ ३२ ॥

मूर्ध्ना चन्द्रं वहसि सततं हन्त भालेन वह्निं
कण्ठेनोच्चैरहह गरलं वक्षसा सर्पराजम् ।
एतन्मध्ये कथय भगवन् किंस्विदत्युष्णमास्ते
सर्वज्ञोऽसि स्मरहर कुतस्त्वत्क्षमो निह्नवाय ॥ ३३ ॥

द्वारं साम्प्रतमङ्गवङ्गसदृशं मोरङ्गवत्प्राङ्गणं
बन्धुस्थानमथास्ति सिन्धुसदृशं चाट्टालिका काशिका ।
इत्थं वाचिकमध्वगाय सुदती व्याहृत्य दृष्ट्वा पतिं
प्राप्तं तत्र तदैव दैववशतो रोमाञ्चिता हृष्यति ॥ ३४ ॥

नित्यं निन्दसि चन्दनानि न विधावानन्दमाविन्दसि
प्रौढामोदवति प्रतिक्षणमथो मन्दासि मन्दानिले ।
उन्मीलत्कलकण्ठकण्ठविरुतैरुत्कण्ठिता लक्ष्यसे
तन्मन्ये मदनो विलासिनि तव स्वान्ते तपस्तप्यति ॥ ३५ ॥

स्निग्धा दृष्टिः किमिति कुजने निर्मिता चानभिज्ञे
स्मेरं तस्मिन्वदनकमलं किं निमित्तं व्यधायि ।
उक्तं कस्माद्वचनमुचितं चाविदग्धे मयेत्थं
पश्चात्तापः कुवलयदृशो मानसं कृन्ततीव ॥ ३६ ॥

नीता रात्रिः कथमपि मया वासरोऽप्येष नेयो
नानोपायैर्विरहवलिता नास्मि सद्यः स्वतन्त्रा ।
नत्वा धातस्तदपि किमपि प्रार्थये त्वामिदानीं
माभूत्कस्याश्चिदपि परुषे प्रेयसि प्रेमबन्धः ॥ ३७ ॥

हस्तार्कयोगमवगत्य भवानिदानी-
मुत्कुण्ठितोऽस्ति किमु खञ्जनदर्शनाय ।
तत्पश्य पश्य कनकैकलताविवर्ति-
पद्मस्थितस्य युगलं नवखञ्जनस्य ॥ ३८ ॥

यूनां पतिष्यति विलोचनखञ्जनानां
दृष्ट्वा शतं नयनखञ्जनमायताक्ष्याः ।
इत्याशयेन किमकारि मनोभवेन
ताटङ्कयुग्मकपटादिह पाशबन्धः ॥ ३९ ॥

अभिनवपरिरम्भारम्भसंभाव्यमानं
मधुकरपटलीभिः पुण्डरीकभ्रमेण ।
मदनविजययात्रामात्रलब्धैर्यशोभि-
स्फुरितमतुललास्यं भाति हास्यं मृगाक्ष्याः ॥ ४० ॥

रुचिरतिमिरजालं दीर्घकालं दधानः
सितविकसितमङ्के चारुपङ्केरुहं च ।
प्रसरदमृतसिन्धूमुद्गमन्नाविरास्ते
नवकनकलतायां निष्कलङ्कः कलावान् ॥ ४१ ॥

अपरगिरिरुदारो लब्धगङ्गाच्छधारो
जयति कनकवल्लीसङ्गभागुज्ज्वलश्रीः ।
तदुपरि रुचिरेयं चन्द्रलेखा विशेषा-
दधिगतपरिवेषा चारुवेषा चकास्ति ॥ ४२ ॥

अमरसरिदुदञ्चद्वीचिरिन्दोरमन्दो
विहरति तिमिराणामेष तस्मिन्विवर्तः ।
तदुपरि रुचिरास्ते तारका तारकान्ति-
र्जयति मदनसृष्टिः काचिदेवंविधैव ॥ ४३ ॥

भित्त्वा हाटकसंपुटं तदुदरात्सिन्दूरमिन्दूद्गमे
वक्त्राम्भोरुहनागरीकरतलेनादाय बिन्दुं ददौ ।
वक्षोजप्रतिपक्षमाशु करजैरुद्भिद्य तल्लोहितं
हृत्वा हर्षवशेन किन्नु तिलकं चक्रेऽतिवक्रेक्षणा ॥ ४४ ॥

रुचिरचिकुरराजीः पश्य राजीवदृष्टे-
र्विहरति कनकाद्रौ दर्पिणी सर्पिणी च ।
विमलकमलकोषे वीतदोषे परं च
स्पृशति बत समन्तादञ्जनं खञ्जनश्रीः ॥ ४५ ॥

विकचकमलकोषे हीनदोषेऽस्ति बिम्बी-
फलरुचिपरिचुम्बी चन्द्रिकाया विलासः ।
कनकशिखरिसङ्गादच्छगङ्गाप्रवाहो
विलसति सुरसाहो वारिवाहोपकण्ठे ॥ ४६ ॥

अमन्दसौन्दर्यविसारिवारि-
विराजिता शैवलिनी विभाति ।
यदङ्कजं पङ्कजयुग्ममुच्चै-
रनङ्गतुङ्गश्रियमादधाति ॥ ४७ ॥

आस्ते मतल्लो नवहेमवल्ली
तस्यां सुवर्णाचलयोः प्रकाशः ।
तस्मिन्नभूदिन्दुकलाविलासो
यस्मिन्निवासो मकरध्वजस्य ॥ ४८ ॥

आप्लाविता हेमघटीतटी चेत्
पटीरपङ्कावलिभिर्यदि स्यात् ।
तदोपमीयेत मुखारविन्द-
मन्दस्मितस्नातकुचाञ्चलश्रीः ॥ ४९ ॥

मेरुद्वयं वर्षति वारिबिन्दू-
निन्दूदरादुल्लसति स्मितश्रीः ।
विधुर्जहावम्बुजवैरिबन्ध-
मन्धं तमो मुञ्चति बन्धनानि ॥ ५० ॥

निस्पन्दमिन्दीवरयुग्ममासी-
दन्धं तमो बन्धनमाचकाङ्क्ष ।
मेरावभूदिन्दुकलाविलासो
बभूव हासो विधुमण्डलस्य ॥ ५१ ॥

पाथोरुहद्वन्द्वरुचा सनाथो
निशाधिनाथो रुरुचे तमोभिः ।
बभूव शम्पाप्यथ वीतकम्पा
पीयूषपम्पावलिरुल्ललास ॥ ५२ ॥

कीर्णा सुवर्णाचलभूमिरिन्दु-
कलाकलापैरभितो विरेजे ।
सदर्पकन्दर्पनृपप्रशस्ति-
वर्णालिपूर्णा जयपत्रिकेव ॥ ५३ ॥

नीलाम्बरावगुण्ठितवदनविधोरुद्गता दृष्टिः ।
शफरीव जयति शैवलमालान्तरिताम्बुजादस्याः ॥ ५४ ॥

मुक्ताफलैकावलिरम्बुजाक्ष्या
वक्षोजयोरुज्ज्वलकुन्दकान्तिः ।

तरङ्गिणीसङ्गिरथाङ्गयूनो-
श्चक्रीकृता भाति मृणालिकेव ॥ ५५ ॥

रराज राजीवविलोचनायाः
स्तनद्वये हारविसारिकान्तिः ।
सुमेरुशृङ्गद्वयसङ्गिगङ्गा-
लसत्तरङ्गाकुलमालिकेव ॥ ५६ ॥

सुवर्णकम्बुस्खलदम्बुचारु-
धारेव हारे रुचिराविरासीत् ।
बालावपुःकामधनुर्विलग्ना
द्विधाकृता मञ्जुपतञ्चिकेव ॥ ५७ ॥

इन्द्रनीलमणिमञ्जुमालिका
भाति हन्त कुलपालिकाकुचे ।
तामसीव कनकाद्रिमस्तके
भृङ्गराजिरिव पद्मकुड्मले ॥ ५८ ॥

श्यामतामरसदामकैतवा-
दास्यचन्द्रमकृशा निशा चिरम् ।
सेवते स कथमन्यथाधुना
लक्ष्यते कुचसरोजकोरकः ॥ ५९ ॥

सुमेरुविस्फूर्जदुपत्यकायां
सदा तमिस्रा परितो यदि स्यात् ।
तदोपमीयेत तमालनीला
माला मणेरस्य तले कुचस्य ॥ ६० ॥

पद्मरागमणिमञ्जुमालया
बालया कुचयुगं विभूषितम् ।
स्वीयपुष्पततिचुम्बिदाडिमी-
युग्मवद्विलसति प्रतिक्षणम् ॥ ६१ ॥

माणिक्यमाला विमलास्ति बाला-
कुचद्वये कुङ्कुमशोणकान्तिः ।

सुमेरुशृङ्गद्वयसङ्गिरिङ्ग-
न्नवीनसूर्यातपमालिकेव ॥ ६२ ॥

सिन्दूरबिन्दुं रविमाननेन्दुं
परपर्श धम्मिल्लतमः समं यत् ।
तद्वश्यकामो जयति स्म कामो
वामोरुशृङ्गारतरङ्गिणीषु ॥ ६३ ॥

शीतांशुरस्ताचलमौलिचुम्बी
कथं विलम्बी दयितो बभूव ।
एषा निमेषादिव हन्त दोषा
जगाम शेषापि दशा तदस्तु ॥ ६४ ॥

निशा कृशा हन्त निशाधिनाथो
बभूव पाथोरुहवक्रमन्दः ।
अतः परं हन्त गृहं प्रयामो
विधेहि दामोदर सुन्दराज्ञाम् ॥ ६५ ॥

कोदण्डदण्डस्य विधाय दण्ड-
मखण्डमौर्वीं च पतञ्चिकायाः ।
संन्यासकामोऽथ बभूव कामो
वामोरुमानादनुमीयते स्म ॥ ६६ ॥

विराममेषापि ययौ त्रियामा
स शीतधामा सखि धूसरोऽभूत् ।
तथापि चेदस्ति तवैष मानो
बभूव का नो वद हानिरत्र ॥ ६७ ॥

त्यक्तस्त्वयाद्यापि सखे न मानो
मुधैव का नो वद हानिरस्तु ।
आस्तां स कामो नितरां सकामो
वयं प्रयामो भवनान्तरेषु ॥ ६८ ॥

विराममेषा बत याति दोषा
तथापि रोषारुणितैव दृष्टिः ।
निशापतिः श्लिष्यति पश्चिमाशा-
मये किमाशामफलीकरोषि ॥ ६९ ॥

संबोधितासि परिणामहितैर्वचोभि-
रभ्यर्थितासि चरणावुपधाय मूर्ध्ना ।
अम्भोनिधावथ विधावपि मज्जमाने
माने कथं कथय ते बत पक्षपातः ॥ ७० ॥

उल्लङ्घ्य सर्वभयपर्वतमानताङ्गी
लज्जापयोधिमवधीर्य विधाय धैर्यम् ।
विद्युल्लतेव ललिताङ्गविसारिदीप्ति-
निर्भर्त्सितान्धतमसा रभसादुपैति ॥ ७१ ॥

अभिसरणे तरुणीनां तरणिरिव द्योतते तिमिरम् ।
जलदे सति विधुकल्पे भूरपि तल्पेन तुल्यतां याति ॥ ७२ ॥

सौधीयति विषमवनी दिवसीयति सन्ततं रजनी ।
दीपीयति घनतिमिरं रभसादभिसारिणोर्यूनोः ॥ ७३ ॥

कुल्यातुल्या सरिदियमभूदन्धकारप्रचारः
सूर्याकारः समजनि फणी नूपुरत्वं प्रपेदे ।
आसीदेषा नगरपरिखा पङ्कलेखानुकारा
धारा वारामपि मम पुरा हन्त हारा बभूवुः ॥ ७४ ॥

दीपीयन्ति पयोमुचो घनरुचो मित्रीयति प्रस्फुरद्-
ध्वान्तं सम्प्रति नूपुरीयति फणी तल्पीयति प्रान्तभूः ।
कस्तूरीयति कर्दमः कुलभुवां यस्याभिसारक्रमे
मन्ये धन्यतरेण तेन कृतिना किं किं न तप्तं तपः ॥ ७५ ॥

छन्नौ मेरू जलदपटलैरिन्दुबिम्बावलम्बी
रोलम्बोऽभूद्वनिवलये पङ्कजं च प्रतस्थे ।
विद्युद्वल्ली तिमिरनिकरैरावृतासीदरण्ये
त्वत्पुण्येन व्यरचि रुचिरा सृष्टिरेवंविधैव ॥ ७६ ॥

